# भक्तिरसायनम्॥

## मधुसूदनसरस्वती विरचितम्॥

### प्रथमोल्लासः॥

नवरसमिलितं वा केवलं वा पुमर्थम्

परमम् इह मुकुन्दे भक्तियोगं वदन्ति

निरुपमसुखसंविद्रूपम् अस्पृष्ट दुःखम्

तम् अहम् अखिल तुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि॥ १॥

संसार रोगेण बलीयसा चिरं

निपीडितैस् तत्प्रशमेऽति शिक्षितम्

इदं भवद्भिर् बहुधा व्ययातिगं

निपीयतां भक्तिरसायनं बुधाः॥ २॥

द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता

सर्वेशे मनसो वृत्तिर् भक्तिर् इत्यभिधीयते॥ ३॥

चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम्

तापकैर् विषयैर् योगे द्रवत्वं प्रतिपद्यते॥४॥

कामक्रोधभयस्नेहहर्षशोकदयाऽऽदयः

तापकाश् चित्तजतुनस् तच्छान्तौ कठिनं तु तत्॥५॥

द्रुतचित्ते विनिक्षिप्तः स्वाकारो यस् तु वस्तुना

संस्कार वासना भाव भावना शब्दभागसौ॥६॥

शिथिलीभावमात्रं तु मनो गच्छत्यतापकैः

न तत्र वस्तु विशति वासनात्वेन किञ्चन॥७॥

द्रवतायां प्रविष्टं सद् यत् काठिन्यदशां गतम्

चेतः पुनर् द्रुतौ सत्याम् अपि तन्नैव मुञ्चति॥८॥

स्थायीभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते

व्यक्तश् च रसताम् एति परानन्दतया पुनः॥९॥

भगवान् परमानन्दस्वरूपः स्वयम् एव हि

मनोगतस् तदाकार रसताम् एति पुष्कलम् ॥ १० ॥

कान्ताऽऽदि विषयेऽप्य् अस्ति कारणं सुखचिद्घनम्

कार्याकारतया भेदेऽप्य् आवृतं मायया स्वतः ॥ ११ ॥

सद् अज्ञातञ् च तद् ब्रह्म मेयं कान्ताऽऽदि मानतः

मायाऽऽवृति तिरोधाने वृत्त्या सत्त्वस्थया क्षणम् ॥ १२ ॥

अतस् तद् आविर्भावित्वं मनसि प्रतिपद्यते

किञ्चिन् न्यूनाञ् च रसतां याति जाड्यविमिश्रणात् ॥ १३ ॥

इति वेदान्त सिद्धान्त स्थापिना रसतोदिता

साङ्ख्यसिद्धान्तम् आश्रित्याप्य् अधुना प्रितिपद्यते ॥ १४ ॥

तमो रजः सत्त्व गुणा मोह दुःख सुखात्मकाः

तन्मयी प्रकृतिर् हेतुः सर्वं कार्यञ् च तन्मयम् ॥ १५ ॥

त्रिगुणात्मकम् एकैकं वस्तु त्र्याकारम् ईक्ष्यते

निज मानस सङ्कल्प भेदेन पुरुषैस् त्रिभिः ॥ १६ ॥

कामिन्याः सुखता भर्त्रा सपत्न्या दुःखरूपता
तदलाभात् तथाऽन्येन मोहत्वम् अनुभूयते॥ १७॥
एवं सति सुखाकारः प्रविस्टो मानसे यदा
तदा स स्थायिभावत्वं प्रतिपद्य रसो भवेत्॥ १८॥
परमाण्व् एकरूपं तु चित्तं न विषयाकृति
इत्यादि मतम् अन्येषाम् अप्रमाण्याद् उपेक्षितम्॥ १९॥
गृह्णाति विषयाकारं मनो विषययोगतः
इति वेदान्तिभिस् साङ्ख्यैर् अपि सम्यङ् निरूपितम्॥ २०॥
मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा
घटादि व्याप्नुवच् चित्तं तन्निभं जायते ध्रुवम्॥ २१॥
व्यञ्जको वा यथाऽऽलोको व्यङ्ग्यस्याकारताम् इयात्
सर्वार्थ व्यञ्जकत्त्वाद् धीर् अर्थाकारा प्रदृश्यते॥ २२॥
भगवत् पूज्यपादानाम् इयम् उक्तिः सयुक्तिका

तथा वार्तिककारैर् अप्य् अयम् अर्थो निरूपितः ॥ २३ ॥

अतो मांसमयी योषित् काचिदन्या मनोमयी
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥ २४ ॥

भार्या स्नुषा ननान्दा च याता मातेत्य् अनेकधा
जामाता श्वशुरः पुत्रः पितेत्य् आदि पुमानपि ॥ २५ ॥

बाह्य पिण्डस्य नाशेऽपि तिष्ठत्य् एव मनोमयः
अतः स्थायीति विद्वद्भिर् अयमेव निरूपितः ॥ २६ ॥

एवं स्वभावतो भावस्वरूपम् अभिवर्णितम्
विशेषेण तु सर्वेषां लक्षणं वक्ष्यते पृथक् ॥ २७ ॥

भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम्
यद् गृह्णाति द्रुतं चित्तं किम् अन्यदवशिष्यते ॥ २८ ॥

कठिना शिथिला वा धीर् न गृह्णाति न वास्यते
उपेक्षाज्ञानम् इत्याहुस् तद् बुधाः प्रसरादिषु ॥ २९ ॥

काठिन्यं विषये कुर्याद् द्रवत्वं भगवत् पदे
उपायैश् शास्त्रनिर्दिष्टैर् अनुक्षणम् अतो बुधः ॥ ३० ॥
उपायाः प्रथमस्कन्धे नारदेनोपवर्णिताः
संक्षेपात् तान् अहं वक्ष्ये भूमिभेदविभागतः ॥ ३१ ॥
प्रथमं महतां सेवा तद् दयापात्रता ततः
श्रद्धाऽथ तेषां धर्मेषु ततो हरिगुण श्रुतिः ॥ ३२ ॥
ततो रत्यङ्कुरोत्पत्तिस् स्वरूपाधिगतिस् ततः
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥ ३३ ॥
भगवद्धर्मनिष्ठातस् स्वस्मिन् तद्गुणशालिता
प्रेम्णोऽथ परमाकाष्ठेत्य् उदिता भक्ति भूमिका ॥ ३४ ॥
लक्षणं भगवद्भक्तेः साधनं सोपपत्तिकम्
सभूमिकं स्वरूपञ् च यथाबुद्धीह वर्णितम् ॥ ३५ ॥

इति श्री परमहंस परिव्राजकाचार्य श्री मधुसूदनसरस्वती विरचिते भगवद्भक्तिरसायने स्वरूपभूमिकासाधन सहित भक्तिसामान्यनिरूपणं नाम प्रथमोल्लास स्समाप्तः॥

## द्वितीयोल्लासः॥

द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा
सा भक्तिर् इत्यभिहिता विशेषस् त्व् अधुनोच्यते॥ १ ॥
चित्तद्रुतेः कारणानां भेदाद् भक्तिस् तु भिद्यते
तान्य् उक्तानि तु संक्षेपाद् व्याख्यायन्तेऽधुना
स्फुटम्॥ २ ॥
कामश् शरीरसम्बन्धविशेषस् स्पृहयालुता
सन्निधानासन्निधानभेदेन स भवेद् द्विधा॥ ३ ॥

तज्जन्यायां द्रुतौ चित्ते या स्याच् छ्रीकृष्णनिष्ठता

सम्भोगविप्रयोगाख्या रतिस् सा सा क्रमाद् भवेत्॥४॥

क्रोध ईर्ष्या निमित्तं तु चित्ताभिज्ज्वलनं भवेत्

तज्जन्यायां द्रुतौ सा तु द्वेष शब्देन गृह्यते॥५॥

अत्र चेतो व्याकुलत्वं सोपद्रावकदर्शनात्

उपद्रावकनाशार्थं तत्प्रीत्यर्थं च तद् द्विधा॥६॥

तत्राद्यं द्वेष एव स्याद् द्वितीयं रतिशब्दभाक्

उपरिष्टात् तदुभयं मया स्पष्टीकरिष्यते॥७॥

द्वेषा हेतुस् स्वमन्तूत्थं वैक्लव्यं चित्तगं तु यत्

तज्जन्यायां द्रुतौ याऽऽस्ते रतिस् सा भयम् उच्यते॥८॥

स्नेहः पुत्रादिविषयः पाल्यपालकलक्षणः

सेव्यसेवकभावोऽन्यः सोऽप्य् उक्तस् त्रिविधो बुधैः॥९॥

भगवद्दास्यसख्याख्यां मिश्रितं चापरं जगुः

या कृष्णाकारता चित्ते तज्जन्यद्रुतिशालिनि॥ १० ॥

पाल्यपालकभावेन सा वत्सलरतिर् भवेत्

सेव्यसेवकभावेन प्रेयोरतिर् इतीर्यते॥ ११ ॥

हर्षश् चित्तसमुल्लासः कथ्यते स चतुर्विधः

एकः परानन्दमयः श्रीशमाहात्म्यकारणम्॥ १२ ॥

तज्जन्यायां द्रुतौ शुद्धा रतिर् गोविन्दगोचरा

एतदन्तं हि शास्त्रेषु साधनाम्नानम् इष्यते॥ १३ ॥

व्रीडा विकृतवाग्वेषचेष्टाऽऽदि जनितोऽपरः

तज्जन्यायां द्रुतौ चेतोविकासो हास उच्यते॥ १४ ॥

लोकोत्तरचमत्कारिवस्तुदर्शनजः परः

तज्जन्यायां द्रुतौ चेतोविकासो विस्मयो मतः॥ १५ ॥

युद्धादि ताप जनितो वीराणां जायते परः

जितचित्तस्य विस्तारो द्रुतस्योत्साह उच्यते॥ १६ ॥

इष्टविच्चेदजनितो यश्चित्ते क्लिष्टतोदयः

तज्जन्यायां द्रुतौ विष्टा रतता शोक उच्यते॥ १७॥

दया घृणा स्याद् विषयतुच्छत्वज्ञानदीर्घिका

तया द्रुते तु मनसि जुगुप्सा जायते त्रिधा॥ १८॥

पूतिव्रणादिविषये कथितोद्वेगिनी बुधैः

श्मशानोत्थपिशाचादिविषया क्षोभिणी भवेत्॥ १९॥

देहेन्द्रियादिदुःखे त्व् अविचारण पुरस्सरा

घृणा शुद्धेति कविभिस् सा जुगुप्सा प्रकीर्तिता॥ २०॥

या तु शोच्यस्य रक्षार्थं प्रवृत्ति रनुकम्पया

तया द्रुते तु मनसि दयोत्साह स्स्मृतो बुधैः॥ २१॥

सर्वस्वमपि दास्यामि प्रार्थयेति च यो महान्

उद्यमा द्रुत चित्तस्य दानोत्साह स्स उच्यते॥ २२॥

तथा स्वधर्मरक्षार्थं या प्रवृत्तिः प्रयत्नतः

तया चित्तस्य विस्तारो धर्मोत्साहो द्रुतौ भवेत्॥ २३॥

वशीकाराख्य वैराग्यं यत् कामास्पृहतात्मकम्

तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते॥ २४॥

इतोऽन्यथा तु चित्तस्य न द्रुतिर् विद्यते क्वचित्

तदभावात् तु भावो न निरुक्तान्योऽस्ति कश्चन॥ २५॥

यावत्यो द्रुतय श्चित्ते भावा स्तावन्त एव हि

स्थायिनो रसतां यान्ति विभावादि समाश्रयात्॥ २६॥

धर्मोत्साहो दयोत्साहो जुगुप्सा त्रिविधा शमः

षडप्येते न विषया भगवद्विषया न हि॥ २७॥

धर्मवीरो दयावीरो भीभत्सः शांत इ त्यमी

अतो न भक्ति रसतां यांति भिन्नास्पदत्वतः॥ २८॥

ईर्ष्याजभयजद्वेषौ भगवद्विषयावपि

न भक्तिरसतां यातः साक्षाद् द्रुतिविरोधतः॥ २९॥

शुद्धो रौद्ररस स्तत्र तथा रौद्रभयानकः

नास्वाद्यः सुधिया प्रीतिविरोधेन मना गपि॥ ३० ॥

कामजे द्वे रती शोकः प्रीति भी विस्मयस् तथा

उत्साहो यदि दाने च भगवद्विषया अमी॥ ३१ ॥

व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत्

विभावादि समायोगे तथा भक्तिरसा अपि॥ ३२ ॥

शृङ्गारः करुणो हास्य स्तथा प्रीतिर् भयानकः

अद्भुतो यद्धवीरश्च दानवीरश्च मिश्रिताः॥ ३३ ॥

शुद्धा च वत्सल रतिः प्रेयोरतिर् इति त्रयी।

भावान्तरामिश्रितत्वाद् अमिश्रा रतिर् उच्यते॥ ३४॥

विशुद्धो वत्सलः प्रेयान् इति भक्तिरसास् त्रयः।

रसान्तरामिश्रितास् ते भवन्ति परिपुष्कलाः॥ ३५॥

शृङ्गारो मिश्रितत्वेऽपि सर्वेभ्यो बलवत्तरः।

तीव्र तीव्रतरत्वं तु रते स्तत्रैव वीक्ष्यते॥ ३६ ॥

केच्चित् केवलसङ्कीर्णाः केच्चित् सङ्कीर्णमिश्रिताः।

केच्चित् केवलमिश्राश्च शुद्धाश्च स्युश् चतुर्विधाः॥ ३७॥

तत्र केवल सङ्कीर्णा रौद्रो रौद्रभयानकः।

धर्मवीरो दानवीरो भीभत्सश्शान्त इत्यपि॥ ३८॥

मिश्रा एवान्यविषयाः प्रोक्तास् सङ्कीर्णमिश्रिताः।

भगवद्विषयास् ते तु ख्याताः केवल मिश्रिताः॥ ३९॥

शुद्धास् त्रयः पुरैवोक्ताः सङ्कीर्यन्ते न केनचित्।

एवं निरूपिता भक्तिः संक्षेपादुच्यते पुनः॥ ४०॥

राजसी तामसी शुद्धसात्त्विकी मिश्रता च सा।

ईर्ष्याजद्वेषजाऽऽद्या स्याद् भयजद्वेषजापरा॥ ४१॥

हर्षजा शुद्धसत्त्वोत्था कामाशोकादिजेतरा।

सत्त्वजत्वे तु सर्वासां गुणान्तरकृताभिदा॥ ४२॥

तत्र ते रतितां नैव यातः सुखविरोधतः।
रतिशब्दं तु भजतः सुखमय्यौ परे द्रुती॥ ४३॥
भक्तिश् चतुर्विधाप्येषा भगवद्विषया स्थिरा।
दृष्टादृष्टोभयैकैकफला भक्तिस् त्रिधा भवेत्॥ ४४॥
राजसी तामसी भक्तिर् अदृष्टफलमात्रभाक्।
दृष्टादृष्टोभयफला मिश्रिता भक्तिर् इष्यते॥ ४५॥
शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु।
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु॥ ४६॥
दृष्टादृष्टफला भक्तिः सुखव्यक्तेर् विधेरपि।
निदाघदूनदेहस्य गंगास्नानक्रिया यथा॥ ४७॥
रजस्तमाऽभिभूतस्य दृष्टांशः प्रतिबध्यते।
शीतवातातुरस्येव नादृष्टांशस्तु हीयते॥ ४८॥
तथैव जीवन्मुक्तानाम् अदृष्टांशो न विद्यते।

स्नात्वा भुक्तवतां भूयो गंगायां क्रीडतां यथा॥४९॥

वर्तमानतनुप्राप्यं फलं दृष्टम् उदाहृतम्।

भाविदेहोपभोग्यं यत् तददृष्टम् उदीरितम्॥५०॥

रजस्तमःप्रचण्डत्वे सुखव्यक्तिर् असत्समा।

तीव्रवायुविनिक्षिप्त दीपज्वालेव भासते॥५१॥

तस्मात्स्वयंप्रभाऽऽनन्दाकाराऽपि मतिसन्ततिः।

प्रतिबन्धवशान् न स्यात् सुखव्यक्तिपदास्पदम्॥५२॥

रजः प्रबलसत्त्वांशाद् ईर्ष्याजद्वेषमिश्रिता।

मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते॥५३॥

तमः प्रबलसत्त्वांशाद् भीतिजद्वेषमिश्रिता।

मनोवृत्तिः परानन्दे कंसस्य न सुखायते॥५४॥

तयोर् भाविशरीरे तु प्रतिबन्धक्षये सति।

सैव चित्तद्रुतिर् भक्तिर् असतां प्रतिपद्यते॥५५॥

अधुनाऽपि भजन्तो ये द्वेषात् पाशुपतादयः।

तेषाम् अप्येवम् एव स्याद् अथवाऽनेन तुल्यता॥ ५६ ॥

द्रुतौ सत्यां भवेद्भक्तिर् अद्रुतौ तु न किञ्चन।

चित्तद्रुतेर् अभावेन वेनस् तु कतमोऽपि न॥ ५७ ॥

रजस्तमो विहीना तु भगवद्विषया मतिः।

सुखाभिव्यञ्जकत्वेन रतिर् इत्य् अभिदीयते॥ ५८ ॥

स्नेहस्यैव विकारः प्रिययोर् अत्यन्तभावनाद् अनिशम्।

विरहासहिष्णुताऽऽत्मा प्रीतिविशेषो रतिर्नाम॥ ५९ ॥

रजस् तमस् समुच्चेद तारतम्येन गम्यते।

तुल्येऽपि साधनाभ्यासे तारतम्यं रते रपि॥ ६० ॥

विरहे यादृशं दुःखं तादृशी दृश्यते रतिः।

मृदुमध्यादिमात्रत्वाद् विशेषोऽत्रापि वीक्ष्यते॥ ६१ ॥

वैकुन्ठे द्वारकायां च श्रीमद् बृन्दावने तथा।

मृदुतीव्रा मध्यतीव्रा तीव्रतीव्रा च सा क्रमात्॥ ६२॥

इयं निसर्गसंसर्गौपम्याध्यात्माभियोगजा।

संप्रयोगाभिमानाभ्यां समारोपे स्थिता तथा॥ ६३॥

स्पर्शे शब्दे तथा रूपे रसे गन्धे च केवले।

समुच्चिते च सा तत्रेत्येका षड्विधा भवेत्॥ ६४॥

शुद्धा व्यमिश्रिता चेति पुनर् एषा द्विधा भवेत्।

तत्रानुपाधिश्शुद्धा स्यात् सोपाधिर् मिश्रितोदिता॥ ६५॥

अनुपाधिः परानन्द महिमैक निबन्धना।

भजनीयगुणानन्त्याद् एकरूपैव सोच्यते॥ ६६॥

कामसंबन्ध भयतः सोपाधिस् त्रिविधा भवेत्।

विभावादिसमायोगे शुद्धभक्तिरसो भवेत्॥ ६७॥

शृङ्गारमिश्रिता भक्तिः कामजा भक्तिर् इष्यते।

सम्बन्धजा रतिर् याति पूर्वोक्तां रसतां द्वयोः॥ ६८॥

एको वत्सलभक्त्याख्यः प्रेयोभक्तिस् तथाऽपरा।
भयजा रतिर् अध्यास्ते रसं प्रीतिभयानकम्॥ ६९॥
एकदा यद्यपि व्यक्तम् इदं रति चतुष्टयम्।
तदा तु पानकरसन्यायेन परमो रसः॥ ७०॥
एकद्व्यादि रसव्यक्तिभेदाद् रसभिदा भवेत्।
तस्मात् क्वचित् तदभ्यासं कुर्याद् रतिचतुष्टये॥ ७१॥
व्रजदेवीषु च स्पष्टं दृष्टं रतिचतुष्टयम्।
तच्चित्तालम्बनत्वेन स्वचित्तं तादृशं भवेत्॥ ७२॥
रसान्तरविभावादि सङ्कीर्णा भगवद्रतिः।
चित्ररूपवद् अन्यादृग् रसतां प्रतिपद्यते॥ ७३॥
रसान्तरविभावादि राहित्ये तं स्वरूपभाक्।
दशमीम् एति रसताम् सनकादेर् इवाधिकाम्॥ ७४॥
रतिर् देवादिविषया व्यभिचारी तथोर्जितः।

भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥ ७५ ॥

देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात्।

तद् योज्यं परमानन्दरूपे न परमात्मनि ॥ ७६ ॥

कान्तादिविषया वा ये रसाद्यास् तत्र नेदृशम्।

रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥ ७७ ॥

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः।

खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥ ७८ ॥

क्रोधशोकभयादीनां साक्षात् सुखविरोधिनाम्।

रसत्वमभ्युपगतं तथाऽनुभवमात्रतः ॥ ७९ ॥

इहानुभवसिद्धेऽपि सहस्रगुणितो रसः।

जडेनेव त्वया कस्माद् अकस्माद् अपलप्यते ॥ ८० ॥

इति श्री परमहंस परिव्राजकाचार्य

श्री मधुसूदनसरस्वती विरचिते

भगवद्भक्तिरसायने

भक्तिविशेषप्रतिपादको नाम

द्वितीयोल्लास स्समाप्तः ॥

## तृतीयोल्लासः ॥

ननु केयं रसो नाम किन्निष्ठो वा भवेदसौ।

अस्य प्रत्यायकः को वा प्रतीतिर् अपि कीदृशी॥ १ ॥

विभावैर् अनुभावैश्च व्यभिचारिभिर् अप्युत।

स्थायीभावः सुखत्वेन व्यज्यमानो रसः स्मृतः॥ २ ॥

सुखस्यात्मस्वरूपत्वात् तदाधारो न विद्यते।

तद्व्यञ्जिकाया वृत्तेस् तु समाजिकमनः प्रति॥ ३ ॥

काव्यार्थनिष्ठा रत्याद्याः स्थायिनः सन्ति लौकिकाः।

तद्बोद्धृनिष्ठास् त्वपरे तत्समा  अप्यलौकिकाः॥४॥

बोध्यनिष्ठा यथास्वन्ते सुखदुःखादि हेतवः।

बोद्धृनिष्ठास् तु सर्वेऽपि सुखमात्रैकहेतवः॥५॥

अतो न करुणादीनां रसत्वं प्रतिहन्यते।

भावानां बोद्धृनिष्ठानां दुःखाहेतुत्वनिश्चयात्॥६॥

तत्र लौकिकरत्यादेः कारणं लौकिकं तु यत्।

काव्योपदर्शितं तत् तु विभाव इति कथ्यते॥७॥

लौकिकस्यैव रत्यादेर् लोके यत् कार्य मीक्षितम्।

कव्योपदर्शितं तत् स्याद् अनुभावपदास्पदम्॥८॥

लौकिकस्यैव रत्यादे ये भावाः सहकारिणः।

कव्योपदर्शितास् ते तु कथ्यन्ते व्यभिचारिणः॥९॥

अलौकिकस्य रत्यादेः सामाजिकनिवासिनः।

उद्बोधे कारणं ज्ञेयं त्रय मेतत् समुच्चितम्॥ १०॥

ज्ञातस्य परसम्बन्धाद् अन्ये साधारणात्मना।

अलौकिकं बोधयन्ति भावं भावास् त्रयोऽप्यमी॥ ११॥

भावत्रितय संसृष्ट स्थायिभावावगाहिनी।

समूहालम्बनात्मैका जायते सात्त्विकी मतिः॥ १२॥

साऽनन्तरक्षणेऽवश्यं व्यनक्ति सुखम् उत्तमम्।

तद्रसः केचि दाचार्या स्ताम् एव तु रसं विदुः॥ १३॥

तेषां प्रत्येकविज्ञानं कारणत्वेन तैर् मतम्।

स्थायीभावो रस इति प्रयोगस् तूपचारतः॥ १४॥

एव मव्यवधानेन क्रमो यस्मान् न लक्ष्यते।

असंलक्ष्यक्रमव्यङ्ग्यं ध्वनिं तस्माद् इमं विदुः॥ १५॥

व्यवधानात् क्रमो लक्ष्यो वस्त्वलङ्कारयोर् ध्वनौ।

लक्ष्यव्यङ्ग्यक्रमं तस्माद् ध्वनि मेतं प्रचक्षते॥ १६॥

रस भाव तदाभास भावशान्त्यादि रक्रमः।

अनन्तरक्षणे यस्माद् व्यज्यतेऽवश्यम् एव सः॥ १७॥

श्रुतिदुष्टादयो दोषा ये रसप्रतिबन्धकाः।

तदभावोऽपि सामाग्र्यां निविष्टोऽनिष्टहानिकृत्॥ १८॥

या रीतयो ये च गुणास् तज्ज्ञानम् अपि कारणम्।

अलङ्काराश्च विज्ञाता भवन्ति परिपोषकाः॥ १९॥

गुणालङ्काररीतीनां भावानां च निवेदकः।

तस्य प्रत्यायकः शब्दो वृत्त्या व्यञ्जनरूपया॥ २०॥

वृत्तिः कार्याऽपरोक्षाऽस्य शब्दस्य सुखगर्भिणी।

दशमस् त्वम् असीत्यादि  वाक्योत्थमति वृत्तिवत्॥ २१॥

नित्यं सुखम् अभिव्यक्तं रसो वै स इति श्रुतेः।

प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका॥ २२॥

कार्यज्ञाप्यादि वैधर्म्यं यत् तु कैश्चिन् निरूपितम्।

तद् अप्येतेन मार्गेण योज्यं शास्त्राविरोधतः ॥ २३ ॥

परमानन्द आत्मैव रस इत्याहु रागमाः ।

शब्दतस् तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥ २४ ॥

अर्थवादाधिकरणे नवशैलादिवर्णनम् ।

श्रोतृणाम् सुखमात्रार्थम् इति भट्टैर् उदाहृतम् ॥ २५ ॥

कार्यान्वितत्ववादेऽपि न विरोधोऽस्ति कश्चन ।

यस्मात् कृतीप्सितत्वेन कार्यं सुख मपीष्यते ॥ २६ ॥

अलौकिक नियोगे तु न किञ्चिन् मानम् ईक्षते ।

लोके वाचां च सर्वेषां तत्परत्वं न युज्यते ॥ २७ ॥

प्रयोजनवद् अज्ञातज्ञापकत्वं च मानता ।

शब्दस्य कार्यपरता त्वाचार्यै रेव खण्डिता ॥ २८ ॥

देवताधिकृतिन्यायात् पदै रन्यपरै रपि ।

प्रयोजनवद् अज्ञाता बाधितार्थमतिर् भवेत् ॥ २९ ॥

तस्माद् अन्यपरत्वे वा स्वातंत्र्ये वा पदानि नः।
व्यञ्जयन्ति परानन्दं सहकार्यानुरूपतः॥३०॥

इति श्रीमत्परमहंस परिव्राजकाचार्य
श्री मधुसूदनसरस्वती विरचिते
श्री भगवद्भक्तिरसायने
भक्तिरसप्रतिपादको नाम
तृतीयोल्लास स्समाप्तः॥
सर्वं सम्पूर्णम्॥